# कालिदासरहस्यम्

( खण्डकाव्यम् )

( हिन्दीभाषानुवाद-सहितम् )

*

कविः

**श्रीधर भास्कर वर्णेकरः, एम्. ए., काव्यतीर्थः**

[ डी. डी. नॅशनल कॉलेज, नागपुरम्
इत्यत्र संस्कृत-प्राध्यापकः
साप्ताहिक-संस्कृत-भवितव्यस्य सम्पादकश्च ]

*

अनुवादकर्त्री

**सौ. कमला श्री. वर्णेकर, एम्. ए.**

*

मूल्यम् २ रु.

या कालिदासकवैनरिह लब्धवर्णा
रम्योज्जयिन्यतितरां भुवने चिराय ।
तत्र प्रकाशितमिदं नव-खण्डकाव्यं
तन्नूनमेव फलितं मम पूर्वपुण्यम् ॥१॥

नक्षत्रकान्तिरुदिता कुसुमेषु नूनं
तारासु वा परिमलः कुसुमाङ्गभूतः ।
श्रीकालिदासकविता–स्तुतिकाव्यमेतत्
पूज्येन राष्ट्रपतिना प्रविकाश्यते यत् ॥२॥

श्रीधर–भास्कर–वर्णेकरः

## लोकनायक-माधव-श्रीहरि-अणे-महाभागानाम्

# प्रस्तावना

ख्यातनाम्ना कविवर्येण वर्णेकरेण 'कालिदास–रहस्यम्' नाम-इदं नवकाव्यं विरचितम्। कवेः वर्णेकरस्य संस्कृतभाषाप्रभुत्वं, तल्लेखनभाषणपटुत्वं च अखण्डभरतखण्डे संस्कृताभिमानिनां सज्जनानां विदितमेव। संस्कृतभाषाप्रचाराय 'संस्कृत-भवितव्यम्' नाम साप्ताहिकं वृत्तपत्रं गीर्वाणवाण्यां कतिपयवर्षपर्यन्तं प्रा. वर्णेकरेण सम्पाद्यते इति विश्रुतमेव। तथैव तेन अनेकानि शतश्लोकात्मकानि खण्डकाव्यानि प्रकाशितानि। तेषु कानिचित् नेहरू-सावरकर-रामकृष्णपरमहंसादि-राष्ट्रविभूतीनां लोकोत्तरगुणानधिकृत्य लिखितान्यासन्। तानि रसिकानां संस्कृतभाषाप्रेमिणां प्रशंसास्पदं बभुवुः। वर्णेकरस्य संस्कृतकविता प्रसादसुभगा श्रुतिरम्या अर्थगंभीरा च। न तद्रचनासु क्वचिदपि क्लिष्टत्वं दृश्यते।

एतस्मिन् कालिदासरहस्ये काव्ये कविकुलगुरोः कवितासौन्दर्य-रहस्यं वर्णेकरेण कयाप्यभिनव–रीत्यैव प्रकटीकृतम्। प्रायः कालिदासशब्दैरेव तत्काव्यरहस्य–स्पष्टीकरणस्य कविवर्य–वर्णेकरस्य अयं यत्नः अभिनवः नितान्तमाधुर्योत्पादकः कविहृदय–रसिकता-द्योतकश्च।

काव्यादौ कविना वर्णेकरेण संस्कृत–साहित्यशास्त्र–मर्यादां शिष्टकवि–सम्प्रदायं च अनुसृत्य नमस्क्रियारूपमंगलमाचरितं निम्नोद्धृते प्रथमश्लोके–

श्रीकालिदास ! त्वदमूर्तमूर्तिं मनःपथे मे सहसा स्फुरन्तीम् ।
सद्भावना वाक्कुसुमैः किरन्ति ह्याचारलाजैरिव पौरकन्याः ।।

कवेः सद्भावनाः तन्मनसि स्फुरन्तीं श्रीकालिदासस्य अमूर्तमूर्तिं वाक्कुसुमैः किरन्ति पूजयन्तीत्यर्थः । चतुर्थचरणे श्लोकस्य दृष्टान्तार्थं कालिदासोक्तिरेव समुद्धृता । अत्र कालिदास–नमने कविना कालिदासीयशब्दानाम् उपयोगः कृतः । यथा गंगापूजने गंगोदकेनैव गंगायै पाद्याऽर्घ्यादीन् उपचारान् करोति भक्तजनः, तद्वत् अयं प्रकार इह कविना अवलंबितः । वर्णेकरस्य कविकुलगुरु–कालिदासीयानाम् उभयविध-काव्यानां दृढव्यासंगः अधीतस्योपस्थितिः योजनाचातुर्यं च प्रतीयतेऽस्मिन् काव्ये प्रतिश्लोकम् । कवेरेते गुणाः पाठकानां साश्चर्यानन्दविषया भवंति । स्वप्रतिभाशक्तिः कालिदासकाव्य–रसपानेन स्फुरितेति कविना स्वयमेव निवेदितं प्रस्तावनाष्टकस्य द्वितीयश्लोके । तत्रैव स्वहृदयस्थः "अव्यक्तवागुत्कट-सान्द्रभावः" कालिदासेन अन्यत्र वर्णितया द्विपेन्द्रस्य अन्तर्मदा-वस्थया उपमितः । अन्यत्रापि कविना उक्तमेव—

लावण्यसौन्दर्यरसानुविद्धा मच्चित्तबिम्बे कविता त्वदीया ।
उद्बिम्बिता दर्पणमादधाना विवृद्धशोभेव विभाति गौरी ।।

वर्णेकरस्य प्रतिभा कालिदास-सरस्वत्यां स्नाता तदाभरणैरलंकृता तद्रसपान–पुष्टापि भृशं तद्रसपानाभिलाषिणी, निर्मला रुचिरा सरसा

च रसिकानां विनोदास्वादप्रेमामोदेभ्यो भवतीति नास्ति मे सन्देहः। अस्मिन् काव्ये कविकुलगुरु–काव्येभ्यः एकैकं वचनमुद्धृत्य तस्य सम्यगुपयोगं कर्तुं कविना हृदयाह्लादिनी पद्यरचना कृता। सा चमत्कृतिजनका कवेर्नवनवोन्मेषशालि–प्रतिभा–निदर्शका च। समस्यापूर्ति चिकीर्षूणां नवकवीनाम् अस्य काव्यस्य पठनं हितम् उपयुक्तंच भवेदिति अहं मन्ये।

तृतीयप्रकरणे युवशिष्यकाणां शृंगारचेष्टावर्णनं कविना कृतम्। इन्दुमतीस्वयंवर–समारोहे मिलितानां राज्ञां शृङ्गारचेष्टावर्णनं रघुवंशे कविकुलगुरुणा कृतम्। तदेव प्रायः विडम्बितमिव अस्मिन् प्रकरणे।

चेष्टावर्णनपराणि रम्याणि पद्यानि कवेः सूक्ष्मावलोकनं दर्शयन्ति। तथापि अस्मिन् ग्रन्थे तदौचित्यं चिन्तनीयं भवितुं शक्यम् इत्यहं मन्ये। यदि अस्मिन् प्रकरणे वर्णिताः युवशिष्यकाणां शृंगारचेष्टाः न कविकल्पनाः अपि तु वास्तविकघटनाः एव, तर्हि युवतियुवक–सहशिक्षणप्रयोगः समाजसुखाय वाऽनर्थाय वा इति महान् गंभीरप्रश्नः प्राप्ताऽनुभवदृष्ट्या अविलंबेन पुनर्विचारणीयः एव। अस्तु। अलम् विषयान्तरेण।

चतुर्थ-पञ्चम-प्रकरणयोः कालिदास–काव्यसृष्टौ यत् उत्तमम्, उदात्तम्, उन्नतम्, उद्बोधकं च तत् चातुर्येण मार्मिकतया च संकलय्य मधुरकोमलकान्तपदावलिषु कांचने रत्नमिव संस्थापितं रसिकवाचकानां बोधाय मोदाय च। दुर्लभयोजकत्वं पुरा कविभिः

वर्णितं वर्णेकरे कविवर्ये प्रभूतत्वेन विद्यते इति एतत्काव्यपरि-शीलनेन सिध्यति। अस्य प्रकरणद्वयस्य यथार्थपठनेन कालिदास-सरस्वत्याः दिव्यत्वं विशालत्वम् अगाधत्वम् अनुपमेयत्वम् अद्वितीयत्वं च रसिकः प्रत्यक्षीकर्तुं क्षमः इति विश्वासः।

अन्ते—

संसेव्यमस्मिन् जगतीतले हि सर्वात्मना सर्वबुधैः प्रकामम्।
श्रीकालिदासस्य समग्रकाव्यं द्वारं यदेतत्पुरुषार्थसिद्धेः॥

इति ग्रंथकर्तुः वल्गुशब्दैः संस्कृताऽभिमानिनः रसिकान् प्रार्थये। कविवर्यस्य यशोगंधः अष्टदिक्षु स्वल्पकालेन व्याप्नोतु इति आशास्य ग्रंथकर्त्रे धन्यवादांश्च वितीर्य विरमाम्यहं प्रस्तावना-लेखनात्।

आश्विने वदि ७म्यां भौमवासरे
विलंबिनि संवत्सरे
शाके १८८०

अणे इत्युपाह्वः श्रीहरिसूनुः
माधवशर्मा।

# प्रकाशिकायाः निवेदनम् ।



मध्यप्रदेशीय–शासन–प्रवर्तित–कालिदासमहोत्सवार्थम् इदं १३४ ( १०९ + २५ ) श्लोकात्मकं खण्डकाव्यम् अनन्तचतुर्दशीतः आरभ्य गान्धी–जयन्तीपर्यंतं (२६–९–५८ तः २–१०–५८) पञ्चषैः दिवसैः मम भर्तृपादैः प्राध्यापक–श्रीधर–भास्कर–वर्णेकर–महोदयैः विरचितम् । कालिदास–तद्वाङ्मय–माहात्म्यम् आरम्भतः १०९ श्लोकपर्यंतं कालिदासीयैः एव पदोपमानैः कविना प्रतिश्लोकं वर्णितम् । सर्वत्र श्लोकेषु कालिदासीयाः शब्दाः उपमाश्च स्थूलतराक्षरैः मुद्रिताः सन्ति । प्रतिश्लोकं मूलसन्दर्भग्रन्थ–सर्ग–(अङ्क) श्लोक–क्रमाङ्काः प्रतिपत्रम् अधस्तात् श्लोक–क्रमाङ्कानुरोधेन सूक्ष्माक्षरैः निर्दिष्टाः । क्वचित् सर्गस्य अङ्कस्य एव क्रमाङ्को निर्दिष्टः । यथा–४०–४५–८९ श्लोकेषु । जिज्ञासुभिः स्वाध्यायार्थं कालिदासीय–मूलग्रन्थतः ते ते सन्दर्भ–श्लोकाः अवश्यं द्रष्टव्याः ।

समग्रम् इदं खण्डकाव्यं रहस्याष्टके विभक्तम् । तत्र पुनः "मङ्गलादीनि मङ्गलान्तानि" काव्यानि इति संस्कृतसाहित्यिक–सम्प्रदायानुरोधेन आरम्भे सुरवाणीवन्दनम् अन्ते च भारतमातुः 'जयगीतम्' इति गीतद्वयं संयोजितम् ।

मध्यप्रदेशीय–कालिदास–समारोह-समित्यधिकारिणाम् सूचनानुसारं काव्यस्यास्य हिन्दी–गद्यानुवादः मया कृतः । तत्संशोधनं

'युगधर्म'–सहसम्पादकेन श्री. प्र. मु. सकदेव–महाशयेन सत्वरम् आत्मीयतया कृतम्, इत्येतदर्थं तस्मै धन्यवादाः वितीर्यन्ते।

मुद्रणकार्यं च अस्य संस्कृतकाव्यस्य नारायण–मुद्रणालय–(धनतोली नागपूरम्) सञ्चालकेन श्री. पां. ना. बनहट्टी–महोदयेन शीघ्रातिशीघ्रं निर्दोषतया कृतम् इत्यतः सोऽपि महाभागः धन्यवादेन अभिनन्द्यते।

भूतपूर्व–विहार–राज्यपालैः अनभिषिक्त–विदर्भाधिपभूतैः 'लोकनायक' इति लोकप्रदत्तोपाधिभूषितैः श्रीमद्भिः माधव–श्रीहरि (बापूजी) अणे महाभागैः यदस्य काव्यस्य प्रास्ताविकं लिखितं तदर्थं मम भर्तृपादैः "जवाहरतरङ्गिण्याः" उपसंहारे लिखितेन श्लोकद्वयेनैव तेभ्यः धन्यवादाः प्रदीयन्ते।

यथा—

"अत्यात्मीयतया काव्यं पठित्वेदं पुनः पुनः
यल्लोकनायकैः पूज्यैः प्रास्ताविकमुदाहृतम्।
कथङ्कारं तदानृण्यं शब्दैरेव हि केवलैः
सम्प्राप्तुं शक्यते, तस्माद् भूयो भूयो नमामि तान्॥"

गुरुवर्य–सरस्वतीप्रसाद–चतुर्वेदिमहाभागानाम् इच्छया प्रेरणया वा विरचितं काव्यमिदं कविना तेभ्यः एव समर्पितम्। (दृश्यताम् उपसंहारे ३–४ श्लोकद्वयम्)। अहमपि काव्यानुवादकर्त्री मत्पूज्यानां तेषाम् आचार्यवर्याणां चरणयोः भक्त्या प्रणम्य विरमामि।

सौ. कमला श्रीधर वर्णेकर, एम्. ए.

# सुरवाणीवंदनम् ।

जयतु जयतु सुरवाणी ।।ध्रु०।।

वेदमन्त्र–सामर्थ्यवर्धिनी ।
भारत–रामायण–विहारिणी ।
सांख्य–योग–वेदान्तबोधिनी ।
ज्ञानामृतनिर्झरिणी । वाणी । जयतु० ।।१।।

त्वं दुर्गा दशशस्त्रधारिणी ।
सरस्वती वीणावरशालिनी ।
लक्ष्मीरतुलित–विभव–दायिनी ।
सकलविश्वजननी । वाणी । जयतु० ।।२।।

मन्त्ररूपिणी सूत्ररूपिणी ।
शास्त्ररूपिणी भाष्यरूपिणी ।
काव्य–कला–संगीतरूपिणी ।
विबुधहृदयमोहिनी । वाणी । जयतु० ।।३।।

# कालिदासरहस्यम्

## ॥ १ ॥

### प्रस्तावनाष्टकम्

श्रीकालिदास ! त्वदमूर्तमूर्ति
मनःपथे मे सहसा स्फुरन्तीम् ।
सद्भावना वाक्कुसुमैः किरन्ति
ह्याचारलाजैरिव पौरकन्याः ॥१॥

त्वत्काव्यमाधुर्यरसप्रपान–
प्रतिस्फुरत्प्रातिभशक्तिरस्मि ।
अव्यक्तवागुत्कटसान्द्रभावो
ह्यन्तर्मदावस्थ इव द्विपेन्द्रः ॥२॥

तरेत्पुमान् सागरमुत्तितीर्षुः
क्षुद्रोडुपेनापि कवे कदाचित् ।
न त्विद्धबुद्धिः प्रतिभाबलं ते
शक्तोऽनुमानैरपि चाधिगन्तुम् ॥३॥

(१) र. २–१०. (२) र. २–७. (३) र. १–२.

# कालिदासरहस्यम्

## ॥ १ ॥

### प्रस्तावनाष्टकम्

१ हे कालिदास! तुम्हारी अमूर्त मूर्ति मेरे हृदयपथपर सहसा प्रकट होते ही, मेरी सद्भावनायें उस मूर्तिपर, जिस प्रकार पौरकन्यायें आचारलाजा (सत्कारकी लाइया) बिखेरती हैं, उसी प्रकार वाक्कुसुम बिखेरती हैं।

२ तुम्हारे काव्य का माधुर्यरस पान करनेसे जिसकी प्रतिभाशक्ति प्रस्फुरित हुई है, अंतःकरणके उत्कट सद्भाव सांद्र हुये हैं परंतु वाणी अव्यक्त रही है, ऐसा मैं, जिसकी मदावस्था अव्यक्त है, ऐसे गजराज के समान हो जाता हूँ।

३ हे कवि! तैरनेकी इच्छा करनेवाला मानव, कदाचित क्षुद्र नौकाके सहारे, सागर पार कर जायेगा। परंतु अति प्रखर बुद्धिमान् पुरुष अनुमानोंसे भी तुम्हारी प्रतिभाका सामर्थ्य नहीं जान सकेगा।

त्वामर्चयेऽहं खलु तावकीनैः
पुष्पैरिवैतैः शतधोपमानैः ।
कल्पद्रुमं पूजयितुं किमन्य-
द्रुमप्रसूनान्युचितानि तानि ॥४॥

शब्दैस्त्वदीयैश्च तथोपमानैः
प्रपूर्णमेतद्धि वचो मदीयम् ।
त्वत्स्तोत्रगानेऽस्तु चिराय मग्नं
रत्नं समागच्छतु काञ्चनेन ॥५॥

त्वत्स्तोत्र-पद्य-स्तबकस्त्वदीयैः
पदोपमानैर्घटितो ममाऽयम् ।
चित्रं न चेद् भाति समप्रकाशः
प्रवर्तितो दीप इव प्रदीपात् ॥६॥

वागस्मदीया मनुजैश्चिराय
संसेवितेतीव सुरैः प्रसन्नैः ।
श्रीकालिदासोत्तमकाव्यरूपः
तेभ्योऽर्पितो जङ्गम-कल्पवृक्षः ॥७॥

स एक एवाखिलमङ्गलानि
कामं प्रसूते प्रियमण्डनानि ।
वागर्थदाम्पत्य-महाप्रपञ्चे
कल्पद्रुमाणामिव पारिजातः ॥८॥

(५) र. ६-७९. (६) र. ५-३७. (७) विक्र. ५-१९.
(८) र. ६-६, उत्तरमेघ. १४.

४ तुम्हारी पूजा, मैं तुम्हारेही पुष्प जैसे शतावधि उपमानोंसे कर रहा हूँ। कल्पवृक्षकी पूजा करनेके लिये क्या दुसरे किसी वृक्षके पुष्पोंका उपयोग करना उचित होगा?

५ तुम्हारे ही शब्दों तथा उपमानोंसे परिपूर्ण ऐसा यह मेरा काव्य तुम्हारे ही स्तोत्रगान में चिरकाल मग्न रहे। रत्न, कांचनसे संयोग पावे।

६ तुम्हारे ही शब्दों तथा उपमानोंसे बना हुआ, यह मेरा तुम्हारी स्तुति का पद्यस्तबक, प्रदीपसे जलाये हुए दीप जैसा यदि समप्रकाशयुक्त हो तो उसमें कुछ आश्चर्य नहीं।

७ मानवोंने हमारी वाणी की चिरकाल उपासना की, इस लिये प्रसन्न हुये देवताओंने, कालिदास के उत्तम काव्यरूप यह 'जंगम (संचारी) कल्पवृक्ष' मानों उन्हे समपर्ण किया है।

८ वह अकेला (कालिदास-काव्यरूप 'जंगम कल्पवृक्ष') वाणी और अर्थ इस दांपत्यके महाप्रपंच में, कल्पद्रुमों में पारिजात सा, सब प्रकारके प्रिय अलंकार निर्माण करता है।

## ॥२॥

### चरित्ररहस्यम्

न ख्रिस्तपूर्वे शतकेऽभवस्त्वं
ख्रिस्तोत्तरे वा प्रथमे तुरीये।
भवो हि लोकाभ्युदयाय येषां
ते त्वादृशा जातु न कालबद्धाः ॥९॥

कृता कवीनां गणनाप्रसङ्गे
कनिष्ठिकाऽधिष्ठित–नामधेया।
अनामिकाऽतस्तवजन्मपुर्या
मातुः पितुर्जन्मतिथेश्च संज्ञा ॥१०॥

न रामगिर्याश्रम–पुण्यभूमौ
न चोज्जयिन्यां न हिमालये वा।
लङ्कासु वङ्गेषु च नैव नैव
वासस्तव स्यात् कविताहृदन्तः ॥११॥

वेतालभट्टामरसिंह–शङ्कु–
धन्वन्तरीणामुडुसन्निभानाम्।
श्रीविक्रमादित्य–सभाम्बरे त्वं
तात्कालिकश्चेत् कवितासुधांशुः ॥१२॥

(९) र. ३-१८.

॥ २ ॥

## चरित्र–रहस्यम्

९ तुम खिस्तपूर्व प्रथम शताब्दि में, या खिस्तोत्तर चतुर्थ शताब्दि में निर्माण नहीं हुए। लोकाभ्युदयार्थ जन्म पानेवाले तुम जैसे (महाकवि) कदापि कालबद्ध नहीं होते।

१० कवियोंकी गणना करनेके अवसरपर कनिष्ठकापर तुम्हारे नाम की योजना की गई, और इसी लिये तुम्हारी जन्मनगरी, माता, पिता, और जन्मतिथि 'अनामिका' (नामविरहित) रही।

११ तुम्हारा वास्तव्य, रामगिरिका पुण्य आश्रम, उज्जयिनी, हिमालय लंका या वंग में नहीं था, वह तो कविताके हृदयमें होगा।

१२ यदि तुम विक्रम–कालमें हुए होगे, तो श्रीविक्रमादित्य महाराजके सभारूप आकाशमें, चमकनेवाले वेतालभट्ट, अमरसिंह, शंकु, धन्वन्तरी, आदि तारों जैसे पुरुषोंमें, तुम कवितासुधा की किरणोंसे प्रकाशमान चंद्र जैसे होगे।

आश्चर्यरम्या हि चरित्रगाथा
या ग्रामवृद्धैः कथितास्तवाऽस्मान् ।
ताः श्रोत्रपेया हृदयं हरन्ति
यक्षस्य सन्देशगिरो यथैव ॥१३॥

त्वं पञ्चबाणः खलु कर्णपूरः
त्वमेव हासोऽप्यथवाऽसि हर्षः ।
गुरो ! कवीनां, कविताङ्गनायाः
न केवलस्त्वं हि विलास एव ॥१४॥

सरस्वतीं स्वां तनयां विधाता
न चेत् त्वयाऽसौ समयोजयिष्यत् ।
त्वां तां च निर्मातुममुष्य यत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥१५॥

समर्प्य गुर्वीं त्वयि काव्यशक्ति
सौन्दर्यसार-ग्रहणप्रवृत्तिम् ।
अवन्ध्ययत्नः स बभूव वेधाः
क्रिया हि वस्तूपहिता प्रसन्ना ॥१६॥

विभान्ति सङ्गीत-सुशिल्प-चित्र-
वादित्र-नृत्यादिकलाः समस्ताः ।
त्वां प्राप्य दीप्रप्रतिभं पतित्वे
तमोनुदं दक्षसुता इवैव ॥१७॥

(१३) पू. मेघ. १३. (१५) र. ७-१४.
(१६) र. ३-२९. (१७) र. ३-३३.

१३ तुम्हारी जो आश्चर्यरम्य और 'श्रोत्रपेय' (कानों से पीने योग्य) चरित्रगाथाएं गांवके वृद्धों ने हमें बतायीं, वह तुम्हारे यक्षसंदेश के समान, हमारा हृदय हरण करती है।

१४ हे कविकुलगुरु! कवितारूप अंगना का तू केवल विलास ही है ऐसा नही। अपि तु उसका पञ्चबाण, (शृंगार), कर्णपूर, हास्य अथवा हर्ष भी तू ही है।

१५ विधाताने अपनी कन्या सरस्वती का यदि तुझसे सहयोग नहीं किया होता, तो तुझे और उसे निर्माण करनेका उस प्रजापतिका प्रयत्न विफल हो जाता।

१६ महान् काव्यशक्ति और सौंदर्यसार ग्रहण करने की प्रवृत्ति, तुझे समर्पण कर, वह विधाता अपने प्रयत्न में सफल रहा। सत्पात्र में किया हुआ प्रयत्न अवश्य सफल होता है।

१७ तुझ जैसे दीप्तप्रतिभा से संपन्न पुरुषको पतिरूप में प्राप्त कर, संगीत, शिल्प, चित्र, वादित्र और नृत्य आदि समस्त कलाएँ अतीव सुशोभित हुई, जिस प्रकार सूर्य को पतिरूप में प्राप्त कर दक्ष प्रजापतिकी कन्याएँ (अतीव सुशोभित हुई।)

दिव्योपमाङ्कां तव काव्यमूर्ति
सकौस्तुभां मूर्तिमिवेश्वरस्य ।
ज्ञात्वाऽग्रपूजाविषये गुणज्ञैः
नैसर्गिकोऽप्युत्ससृजे विरोधः ॥१८॥

## ॥ ३ ॥

## शृङ्गार–रहस्यम्

त्वत्काव्यशृंगाररहस्यमुच्चै–
–रध्यापके पाठयति स्फुटन्ति ।
प्रवालशोभा इव पादपानां
शृङ्गारचेष्टा युवशिष्यकाणाम् ॥१९॥

कश्चित् समीपस्थमवेक्ष्य मित्र–
मह्वाय साचीकृत–चारुवक्त्रम् ।
कटाक्षपातेन हि वामभागे
बालां दिशत्युज्ज्वलगण्डरागाम् ॥२०॥

कश्चित् पुनः संचलितान्तरङ्गः
करारविन्देन मुखारविन्दम् ।
पिधाय मन्दं पिककूजनाभं
पुनः पुनः किञ्चन सीत्करोति ॥२१॥

(१८) र. ६–४६. (१९) र. ६–१२. (२०) र. ६–१४.

१८ कौस्तुभसंपन्न ईश्वर (विष्णु) मूर्तिके समान, दिव्य उपमा-सहित तुम्हारी काव्यमूर्ति को जानकर, अग्रपूजाके संबंध में गुणज्ञोंने अपना नैसर्गिक विरोध भी छोड दिया।

## ॥ ३ ॥

## शृङ्गार–रहस्यम्

१९ तुम्हारे काव्यका शृंगाररहस्य जब अध्यापक उच्च स्वर से पढाते हैं, तब वृक्षों में प्रवालशोभासी, युवक छात्रोंमें शृंगारचेष्टाएँ व्यक्त होती हैं।

२० कोई (छात्र) समीप बैठे हुए और उसी क्षण अपना सुंदर मुख तिरछा करनेवाले, मित्रकी ओर देखते हुए, बाईं ओर बैठी हुई उज्वल गण्डराग (पौडर) लगाई हुई युवती की ओर कटाक्षपातसे संकेत करने लगता है।

२१ दूसरा कोई, अंतःकरण विचलित होनेके कारण, करकमलसे मुखकमल ढाँककर मंदस्वरसे बार बार कोकिल–कूजनसा सीत्कार करने लगता है।

कश्चिद् युवा कर्गंज–कल्पिताङ्गं
बाणं निजं मन्मथबाणकल्पम् ।
गूढं विमुञ्चन् युवतीकदम्बे
सुहृत्समाभाषण–तत्परोऽस्ति ॥२२॥

कश्चित् पुरःसंस्थित–बालिकायाः
वेणीस्थितं पाटलपुष्पमेकम् ।
पार्श्वस्थितो जिघ्रति दीर्घमुच्चै
रसज्ञतां सूचयितुं स्वकीयाम् ॥२३॥

कश्चिद् गुरोर्दृष्टिपथेऽवतीर्णः
मुञ्चन् निजं कर्गजबाणमासीत् ।
जडीकृतः सिंहविलोकनेन
बाणं मुमुक्षन् स यथा दिलीपः ॥२४॥

कश्चिद् पुनश्छद्मगभीरभावं
प्रदर्श्य पृच्छत्यवबुद्धमेव ।
"कुतो वरः कण्टकितप्रकोष्ठः
स्विन्नाङ्गुलिर्वाथ कथं कुमारी ?" ॥२५॥

(२२) र. ६–१६.
(२४) जडीकृतस्त्र्यम्बकवीक्षणेन
वज्रं मुमुक्षन्निव वज्रपाणिः ॥ र. २–४२.
(२५) र. ७–२२.

२२ कोई युवक, अपना मदन बाण जैसा कागजका बनाया हुआ बाण, युवतियोंके समूह में चुपचाप फेककर, मित्रसे संभाषण करने में व्यग्र हो जाता है।

२३ कोई (छात्र) सामने बैठी हुई युवती की वेणी में लगे हुए गुलाब के एकमात्र फूलको पीछे बैठे बैठे, अपनी रसज्ञता सूचित करने के लिये दीर्घकाल तक जोरसे सूंघने लगता है।

२४ कोई (छात्र) अपना कागजका बाण फेकते हुए, गुरुके दृष्टि पथमें आनेके कारण, सिंहके अवलोकनसे जिसप्रकार उस (रघु. दूसरे सर्गमें वर्णित) दिलीप जैसा जड हो जाता है। [पाठभेद--त्र्यंबकके अवलोकनसे वज्र फेकनवाला वज्रपाणि इंद्र हो गया।]

२५ और कोई (छात्र) कपटयुक्त गंभीरभाव प्रकट कर, समझी हुई बातको पूछता है कि, "गुरूजी ! वह वर "कण्टकित–प्रकोष्ठ" (जिसकी कलाई रोमाञ्चित हुई है) क्यौ हुआ और वह कुमारी स्विन्नाङ्गुलि" (जिसके उंगलियोंको पसीना आया है) कैसी हुई ?

तदैव काचित् सुदती हसन्ती
पुंवत्प्रगल्भा चलकुण्डला च ।
ब्रूते, "गुरो ! यः खलु वेद नेदं
'मुक्तोऽथवाऽसौ पशुरेव' नूनम् ॥२६॥

काचिच्च बालाऽवनतोत्तमाङ्गी
तिर्यग्-विसंसर्पि-नखप्रभेण ।
हस्तेन पत्रे हि समुल्लिखन्ती
स्ववल्लभं व्यञ्जयतीव भावम् ॥२७॥

यूनोः कयोश्चित् प्रियभावभाजोः
अन्योन्यलोलानि विलोचनानि ।
भवन्त्यपाङ्ग-प्रतिसारितानि
क्रियासमापत्ति-निवर्तितानि ॥२८॥

काचिन्नवोढा सहसा स्मरन्ती
स्वयं कृतं लाजविसर्गमग्नौ ।
प्रदक्षिणप्रक्रमणं च पत्या
पुनर्नवं विन्दति मोदमन्तः ॥२९॥

स्वयंवरास्थानगतोत्सुकानां
चेष्टाश्च राज्ञामनुकर्तुकामाः ।
केचिद् युवानो जनयन्ति हासं
निर्दन्तवक्त्रस्य गुरोरकस्मात् ॥३०॥

(२६) र. ६-२०. (२७) र. ६-१५.
(२८) र.७-२३. (२९) र. ७-२५.

२६ उसी समय कोई सुदती ( सुंदरदातों वाली ) पुरुषसी ढीठ तरुणी, कानोंके कुण्डल हिलाती तथा मुस्कुराती हुई कहती है, "गुरुजी ! जो इस (छात्रने पूछी हुई) बात को वास्तवमें जो नहीं जानता, वह सचमुझ ही मुक्त या पशु है ।"

२७ कोई युवती मस्तक नीचे झुकाकर, जिसकी नखप्रभा तिरछी पड रही है, ऐसे अपने हाथसे कागजपर अपने प्रियकरका चित्र निकालती हुई, अपना भाव व्यक्त करती है ।

२८ परस्पर प्रेम रखनेवाले कुछ युवक–युवतीयोंकी आँखे एक दूसरेकी ओर.चंचल होकर कनखियोंसे देखती है, और दृष्टिमीलन होतेही पलट जाती हैं ।

२९ कोई नवपरिणीता स्वयं किया हुये लाजाहोम और पतिके साथ की हुई अग्निप्रदक्षिणा का स्मरण आकर, अंत:करणमें पुनरपि नवीन आनंद पाती है ।

३० इन्दुमती स्वयंवरके अवसरपर मण्डप में बैठे हुए उत्सुक राजाओं की चेष्टाओं का अनुकरण करनेवाले कुछ युवक अपने पोपले मुंहवाले गुरूको अकस्मात् हंसा देते हैं ।

## ॥४॥

## अद्भुतरम्यता–रहस्यम्

फणी मयूरस्य तले निषण्णो
ब्रूते मृगेन्द्रोऽपि नरेन्द्रमुच्चैः ।
मेघोऽपि दौत्यं कुरुते सलीलं
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३१॥

क्रीडन्ति कन्या मणिभी, रसज्ञा
कल्पद्रुसूतं मधु संपिबन्ति ।
न यौवनादन्यदहो वयोऽपि
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३२॥

नानन्दहीनो नयनाम्बुपातः
न पुष्पबाणेतरजश्च तापः ।
न विप्रयोगः प्रणयान्यकोपात्
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३३॥

सच्चन्द्रकान्त–द्रव–वर्षणेन
सम्भोग–खेदापगमोऽङ्गनानाम् ।
कल्पद्रुमान्मण्डनवर्गलाभः
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३४॥

(३१) ऋतु, र. २, मेघ. (३२) उ. मे ७, ६, ४.
(३३) उ. मे. ४. (३४) उ. मे. १०.

## ॥ ४ ॥

## अदभुतरम्यता—रहस्यम्

३१ मोर के तले नाग बैठता है, मृगेन्द्र (सिंह) भी नरेन्द्र (राजा) से ऊँची बातें करता है, मेघ भी लीलया दूतकर्म करता है, यह अद्‌भुत रम्यता तुम्हारी काव्यसृष्टि में है।

३२ लडकियोंका मणिओं से (रत्नों से) खेलना रसज्ञ लोगोंका कल्पवृक्षसे निकला हुआ मद्य पीना और यौवन के अतिरिक्त दूसरी अवस्था न होना, यह अद्‌भुत रम्यता तुम्हारी काव्यसृष्टि में है।

३३ आनन्द के सिवाय (अन्य किसी कारण से) अश्रुपात न होना, मदनतापके अतिरिक्त ताप न होना, प्रणयकोपके अतिरिक्त वियोग न होना, यह अद्‌भुत रम्यता तुम्हारी ही सृष्टि में है।

३४ चन्द्रकान्तके द्रवकी वर्षासे स्त्रियों के संभोग—खेदका निवारण होना, और कल्पवृक्षसे सारे अलंकारोंका लाभ होना, यह अद्‌भुत-रम्यता तुम्हारी ही काव्यसृष्टि में है।

सुखोपविष्टैणविनम्रनाभि-
संस्पर्शगन्धीनि शिलातलानि ।
ससीकराः गन्धमयाश्च वाताः
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३५॥

स्थूलाश्रुलेशाः स्थलदेवतानां
भास्वत्प्रभा वौषधिदीपिकानाम् ।
प्रबोधगीतं खगकूजितानां
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३६॥

पयोधराद् वा करिकर्णतालात्
श्रुतः पटीयान् पटहध्वनिश्च ।
वंशस्वरो मारुतपूर्णवेणोः
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३७॥

हिरण्मयी वृष्टिरसौ नभस्तः
प्राणापहा सा मृदुला च माला ।
नरेशसेनाऽर्भक-हार्य-शस्त्रा
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३८॥

उदन्वदाकाश-महीधरेषु
निर्विघ्न-सञ्चारपरा रथास्ते ।
बिडौजसोऽर्धासनगा नरेन्द्राः
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥३९॥

(३५) र. ४-७४, ७३. (३६) उ. मे. ४६, कु. १-१०, र. ९-७१.
(३७) पू. मे. ३७, र. ९-७१, कु. १-८.
(३८) र. ५, ८, ७-६७. (३९) र. ५-२७, ६-७३,

३५ सुखसे बैठे हुए हरिणोंके विनत नाभीके संस्पर्श से सुगंधित शिलातल तथा सीकरयुक्त और सुगंधमय ही वायु, यह अद्‌भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

३६ स्थल-देवताओंके स्थूल अश्रुविन्दु, औषधिदीपिकाओंकी प्रभा और पक्षिकूजनका प्रबोधगीत, यह अद्‌भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

३७ मेघों से या हाथिओं के कर्णताल से (कानकी फडफडाट से) पटु पटहध्वनिका तथा वायुपूर्ण बाँससे बाँसरीके स्वरका, श्रवण होना यह अद्‌भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

३८ आकाश से, वह सोने की वृष्टि, प्राणापहरण करनेवाली वह मृदुल माला, तथा छोटे अर्भक भी जिनके शस्त्र छीन सके ऐसी नरेश-सेना, यह अद्‌भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

३९ समुद्र, आकाश और पर्वतों पर निर्विघ्न संचार करनेवाले वे रथ और इन्द्र के अर्धासन पर बैठनेवाले वे नरेन्द्र, यह अद्‌भुत रम्यता तुम्हारीही काव्यसृष्टि में है।

पञ्चाग्निमध्ये हिमवत्सुकन्या
तपोवनस्थाऽप्सरसश्च कन्या ।
स्वर्गाङ्गना वा नर–सक्त–चित्ता
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥४०॥

सञ्चारिणी पल्लविनी लता सा
स जङ्गमो दैत्यतनुश्चिताग्निः ।
धावद्गिरीन्द्रो नमयन् धरित्रीं
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥४१॥

ध्यानस्थिरा रत्नशिलातलेषु
सत्संयमा निर्जरसुन्दरीषु ।
कल्पद्रुकुञ्जे मुनयोऽसमीहाः
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥४२॥

निसर्गभिन्नास्पदमेकसंस्थे
क्वचिन्नृपे श्रीश्च सरस्वती च ।
क्वचिज्जिगीषा च तथा विरक्तिः
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥४३॥

(४०) कु. ५, शा. ७, विक्र.
(४१) कु. ३–५४, र. १५–१६, कु. ६–५०.
(४२) शा. ७–१२. (४३) र. ६–२९, र. ८–१४.

४० पञ्चाग्नि के बीच में हिमालय की सुकन्या, तपोवन में अप्सराकी कन्या और मनुष्य पर आसक्ति रखनेवाली स्वर्गांगना, यह अद्भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

४१ वह सञ्चारिणी पल्लविनी लता, वह दैत्यरूप जंगम (सञ्चारी) चिताग्नि, धरतीको दबाते हुए दौड़ने वाला वह गिरीन्द्र ( हिमालय ) यह अद्भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

४२ रत्नशिलातल पर स्थिर ध्यानमग्न, स्वर्गसुंदरीयोंके सहवास में उत्कृष्ट संयमपूर्ण और कल्पवृक्ष के निकुञ्ज में निरिच्छ, ऐसे मुनिओंका वर्णन, यह अद्भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

४३ निसर्गतः भिन्न रहनेवाली लक्ष्मी और सरस्वतीका किसी राजा में एकत्रित वास्तव्य, तथा किसी राजा में विजयाकांक्षा तथा विरक्ति ( इन विरुद्धभावों का ) सह अस्तित्व, यह अद्भुत रम्यता तुम्हारी ही काव्यसृष्टि में है।

कार्पण्यदीनश्च चरित्रहीनः
लोभातुरो वा रण–कातरो वा ।
न क्वापि सद्धर्मकते ! व्यलोकि
त्वत्काव्यसर्गे बत कश्चिदेकः ॥४४॥

प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ।
नास्तीति सामग्र्यमदो गुणानां
त्वत्काव्यसर्गे नितरां व्यनक्ति ॥४५॥

कलिन्दकन्या मथुरां गतापि
सा जह्नुकन्या हिमवत्समीपे ।
त्वत्काव्यसर्गे हि कुतोऽपि हेतोः*
प्रयाग–शोभामिव सन्तनोति ॥४६॥

जगज्जनन्या जगदेकनाथे
गिरीशजाया गिरिशे रतिः सा ।
रतिर्यया हन्त कृता ह्यनाथा
त्वत्काव्यसर्गेऽद्भुतरम्यमेतत् ॥४७॥

(४५) कु. ३–२८. *(४६) सचन्दनत्वाद् घनसङ्गमाद्वा.
(४६) र. ६–४८, उ. मे. ५४.
(४७) कु. सर्ग. ४.

४४ हे सद्धर्म कवि ! तुम्हारी काव्यसृष्टि में कार्पण्यदीन, चरित्र-हीन, लोभातुर या रणकातर (युद्ध से डरनेवाला) ऐसा कोई एक भी व्यक्ति, कहाँ भी हमने नहीं देखा।

४५ विश्वविधाताकी प्रवृत्ति प्रायः गुणोंकी समग्रता निर्माण करने में पराङ्मुख होती है, ऐसा तुमने कहा, लेकिन वह वैसी नहीं है यह (तत्त्व) तुम्हारी काव्यसृष्टि में (दिखनेवाली) गुणोंकी समग्रता-ही भली भाँति व्यक्त करती है।

४६ मथुराके सान्निध्य में कलिंदकन्या यमुना, और हिमालय के सान्निध्य में वह जन्हुकन्या गंगा, तुम्हारी काव्यसृष्टि में, किसी विशेष कारण से (सचन्दनत्वाद् घनसंगमाद्वा = चंदनयुक्त होने के कारण यमुना और मेघसमागम होने के कारण गंगा) प्रयागसी (गंगा यमुना संगमकी) शोभा व्यक्त करती है।

४७ जगज्जननी गिरिकन्याकी (पार्वती की) जगदीश्वर गिरीश में, (शंकर में) साक्षात् रतिको भी अनाथ करेनवाली उस रति का वर्णन, यह अद्भुत रम्यता तुम्हारीही काव्यसृष्टि में है।

## ॥५॥

## कवित्व–रहस्यम्

संसेव्यमस्मिन् जगतीतले हि
सर्वात्मना सर्वबुधैः प्रकामम् ।
श्रीकालिदासस्य समग्रकाव्यं
द्वारं यदेतत् पुरुषार्थसिद्धेः ॥४८॥

कामं कवीन्द्राः शतशोऽपि सन्तु
कविप्रसूर्भारतभूस्त्वयैव ।
नक्षत्र–तारा–ग्रह–सङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ४९॥

त्वय्येव सर्वान् सुकवीन् विहाय
रसज्ञवर्गस्य विशन्ति भावाः ।
मदोत्कटे रेचितपुष्पवृक्षा
गन्धद्विपे वन्य इव द्विरेफाः ॥५०॥

त्वद्गुम्फित–श्लोकपरम्परासु
सहस्रधात्मा खलु काव्यलक्ष्म्या ।
समस्त–साहित्यगुणैर्विभक्तः
पयोमुचां पङ्क्तिषु विद्युतेव ॥५१॥

(४९) र. ६–२२. (५०) र. ६–७. (५१) र. ६–५.

॥ ५ ॥

## कवित्व—रहस्यम्

४८ संसार के सारे विद्वानोंने श्रीकालिदासके समग्र काव्यकी सर्वात्मना परिपूर्ण सेवा करनी चाहिए कारण, कि यह ( कालिदास का काव्य ) पुरुषार्थसिद्धि का द्वार है।

४९ भले ही शतावधि कवि वह भारत में हो, लेकिन यह भारत-भूमि तुम्हारे ही कारण "कविप्रसू" हुई है। नक्षत्र, तारा और ग्रह से संकुल होते हुए भी, चन्द्रमाके कारणही रात्रि 'ज्योतिष्मती' ( प्रकाशमयी ) होती है।

५० अन्य सारे कविओंको छोडकर, रसज्ञवर्ग के सारे सद्भाव, तुम में ही प्रविष्ट होते है। जैसे कि भ्रमर पुष्पवृक्षोंको त्याग कर मदोत्कट वन्य गंधगज* में प्रविष्ट होते हैं।

५१ तुम्हारे द्वारा गुम्फित श्लोक-परम्पराओं में काव्यलक्ष्मीने, समस्त साहित्य गुणोंके सहित, अपनी आत्मा को, मेघमाला में विद्युत्सा व्याप्त कर दिया है।

(* गन्धगज = जिसके गन्ध से अन्य सारे हाथीं भागने लगते है ऐसा विजयप्रद हाथी )

अर्थेन वाचश्च तयाऽपि तस्य
त्वत्काव्यसर्गे हि तथा सुयोगः ।
अन्योन्यशोभा परिवृद्धयेऽभूद्
अजेन्दुमत्योर्गिरिजेशयोर्वा ॥५२॥

त्वत्काव्यमाधुर्यरसं प्रकामं
चित्ते समास्वादयति प्रसन्ने ।
भवन्ति सर्वेन्द्रियवृत्तयो नः
सर्वात्मना चित्तमिव प्रविष्टाः ॥५३॥

कवीन्द्र ! काव्यज्ञकुलेन शश्वत्
सत्काव्य-निर्माण-विचक्षणत्वम् ।
त्वत्तो हि निस्संशयमभ्यवाप्तं
लोकेन चैतन्यमिवोष्णरश्मेः ॥५४॥

कवीन्द्र ! संस्मृत्युपयाति हृद्यं
तवोपमावाक्यमुदारभावम् ।
यदा तदा त्वां प्रणमामि भक्त्या
नवोदयं नाथमिवौषधीनाम् ॥५५॥

गीर्वाणवाणी-कवितातिपूता
त्वत्सम्भवं तं रघुवंशमाप्य ।
विभाति नूनं कविराजिराज !—
श्रद्धेव साक्षाद् विधिनोपपन्ना ॥५६॥

(५२) र. ६–६५. (र. ६, कु. ७) (५३) र. ७–१२.
(५४) र. ५–४. (५५) र. २–७३. (५६) र. २–१६.

५२ तुम्हारी काव्यसृष्टि में, अर्थ के साथ वाणीका, तथा वाणीके साथ अर्थ का सुयोग, अज–इन्दुमती अथवा पार्वती-शंकर के सुयोगसा हुआ है और वह परस्परकी शोभा वृद्धिंगत करने में कारणीभूत हुआ है।

५३ तुम्हारे काव्यके माधुर्यरस का आस्वाद, हमारा प्रसन्न चित्त जब लेने लगता है, तब सारी इन्द्रियवृत्तियाँ मानों चित्त में ही संपूर्णतया प्रविष्ट हो जाती है।

५४ हे कवीन्द्र ! काव्यज्ञोंके समूहने, सत्काव्य निर्माण करनेकी कुशलता, जिस प्रकार लोग सूर्यसे चैतन्य प्राप्त करते है उसी प्रकार, निःसंशय निरंतर तुमसेही प्राप्त की है।

५५ हे कवीन्द्र ! तुम्हारा हृद्य और उदार भावयुक्त उपमावाक्य जब कभी मेरी स्मृति में आ जाता है, तब नवोदित औषधिनाथ-चन्द्र जैसे तुमको, मै भक्ति से प्रणाम करता ं।

५६ हे कविराजिराज ! गीर्वाणवाणी की अति पवित्र कविता तुम्हारे द्वारा निर्मित रघुवंशको प्राप्त कर, विधि (क्रिया) सहित साक्षात् श्रद्धासी विराजती है।

त्वद्वाच उद्भूतममुं हि मेघ–
–दूतं कवीनां प्रतिभा बहूनाम् ।
हंसाद्यभिख्यैः शत–दूतकाव्यैः
श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥५७॥

भूयस्सु सत्स्वप्यतिमञ्जुलेषु
काव्येषु नानारसभाववत्सु ।
रसज्ञवर्गस्य तु मेघदूतं
तत्ते विशेषोच्छ्वसितं बभूव ॥५८॥

महाकवित्वेऽपि महेशचण्ड्योः
पित्रोरिवावर्ण्यत कामकेलिः ।
साहित्यसाम्राज्यमहेन्द्र ! तेन
महाजनः स्मेरमुखो बभूव ॥५९॥

शाकुन्तल–श्लोकचतुष्टयं ते
संस्तूयते, किं तु न निश्चितं तत् ।
अप्यग्रसिद्धं यशसे हि पुंसा–
मनन्यसाधारणमेव कर्म ॥६०॥

अनूदितं नाटकमुत्तमं ते
पठन् स शार्मण्य–कविर्ननर्त ।
लोकान्तरस्पृक्पद्पुष्पधन्वन् !
अहो बतासि स्पृहणीयवीर्यः ॥६१॥

(५७) र. २–२. (५८) कु. ७–५. (५९) कु. ८, कु. ५-७०.
(६०) कु. ३–१९. (६१) कु. ३–२०.

५७ तुम्हारी वाणीसे निर्मित उस मेघदूतका अनुसरण, श्रुति के अर्थ का स्मृति ने जिस प्रकार किया उसी प्रकार, हंसदूतादि शतावधि दूतकाव्यों के द्वारा, अनेक कवियों की प्रतिभाने किया ।

५८ अनेकविध अतिमञ्जुल और नाना रस–भाव–युक्त काव्य होते हुए भी, रसिकवर्ग के लिये तुम्हारा वह मेघदूत 'विशेषोच्छ्वसित'सा हुआ है ।

५९ हे साहित्यसाम्राज्य-महेन्द्र ! महाकवि होते हुए भी, तुमने माता पिता समान शंकर–पार्वतीकी कामकेलि का वर्णन किया और उसी कारण महानुभाव ( तुम्हारे संबंध में ) हस पडे। [कुछ महापुरुषोंने तुम्हारा उपहास भी किया ]

६० तुम्हारे शाकुन्तल के उन चार प्रसिद्ध श्लोकों की स्तुति होती है, किन्तु वे (चार श्लोक) निश्चित नहीं हैं । मनुष्यों का अनन्य-साधारण कर्म, अप्रसिद्ध हो तो भी, यश प्राप्तिके लिये कारणीभूत होता है। [यह तुम्हारा सिद्धान्त सत्य है । ]

६१ हे कवि ! तुम, लोगों के अन्तःकरण को शब्दरूप बाणोंसे स्पर्श करनेवाले मदन हो । तुम्हारे उस नाटक (शाकुन्तल) का अनुवाद ही पढकर, वह जर्मनीका कवि (गेटे) नाचता रहा । कितना तुम्हारा सामर्थ्य स्पृहणीय है !

त्वयार्जितज्ञानधनस्य नूनं
सौन्दर्यसर्वस्व–समर्पणेन ।
कवीन्द्र ! तेने रघुणेव तेन
काव्यात्मको विश्वजिदद्वितीयः ॥६२॥

हिमाद्रिसौन्दर्यमलौकिकं तत्
काव्ये त्वयाविष्कृतमद्वितीयम् ।
विलोकयामः खलु मानसाभ्याम्
उपोषिताभ्यामिव लोचनाभ्याम् ॥६३॥

यथैव कण्वस्य तथा तवापि
शकुन्तला सा दुहिता विभाति ।
राज्ञोज्झिता चाप्सरसा गृहीता
दिन–क्षपा–मध्यगतेव सन्ध्या ॥६४॥

विलापिनी मन्मथधर्मपत्नी
शोकाकुला वा रघुनाथपत्नी ।
दुष्यन्तपत्नी च तथा तनोति
समानदुःखां हृदयस्थलीं नः ॥६५॥

स सिंहदन्तान् गणयन् प्रसह्य
सिन्धोस्तटेऽसौ यवनान् विजेता
वज्राहतोऽप्युत्थितवान् युयुत्सुः
आदर्शवीराः खलु ते किशोराः ॥६६॥

(६२) र. ४–८६. (६३) र. २–१९. (६४) र. २–२०.
(६५) कु. ४, र. १३, शा. ४, कु. ४–४,
(६६) शा. ७, माल. ५, र. ३–६१.

६२ हे कवीन्द्र! तुमने सम्पादित किये हुए ज्ञानधनका सौंदर्यसर्वस्व समर्पण कर, उस रघु जैसा काव्यात्मक अद्वितीय 'विश्वजित्'* यज्ञही किया।

६३ तुमने अपने (कुमारसम्भव) काव्य में, वह अद्वितीय और अलौकिक हिमाद्रिसौंदर्य वर्णन किया, जिसे कि हम अपने भूखे मानस–नेत्रसे देखते है।

६४ वह शकुन्तला जिस प्रकार कण्व की, उसी प्रकार तुम्हारी भी कन्या है। राजा (दुष्यन्त) द्वारा परित्यक्त, और अप्सराके द्वारा स्वीकृत, वह (शकुन्तला) दिन और रात्रि की बीच में संध्याके समान विराजती है।

६५ (तुम्हारे काव्य में) विलाप करनेवाली मदनपत्नी (रति), शोकाकुल रघुनाथपत्नी (सीता) और उसी प्रकार शोकाकुल दुष्यन्त-पत्नी (शकुन्तला) हमारा भी हृदयस्थल समान दुःखित करती हैं।

६६ वह सिंहके दाँतों को जबरदस्ती से गिनने वाला (शकुन्तला–पुत्र भरत), वह सिन्धुके तटपर यवनोंको जीतनेवाला (अग्निमित्र शुंग का पुत्र वसुमित्र), और वज्राघात होने पर भी युयुत्सु वृत्ति से खडा होनेवाला (रघु) यह तेरे किशोर, सच्चे आदर्श वीर है।

* [विश्वजित्=जिस में सर्वस्व का दान किया जाता है ऐसा –चक्रवर्ती सम्राटोंने करने योग्य महान् यज्ञ]

त्वयौषधिप्रस्थ–सुवर्णनेन
तथोज्जयिन्युत्तम–चित्रणेन ।
प्रियालका–सुन्दरदर्शनेन
वचोमयः स्वर्ग इव व्यतानि ॥६७॥

स्त्रीवर्णनेषु प्रतिभाति काव्ये
पावित्र्य–सौन्दर्यकलाद्वयं ते ।
मेरोरुपान्तेष्विव वर्तमान–
मन्योन्यसंसक्तमहस्त्रियामम् ॥६८॥

शरद्घनं नार्दति चातकोऽपि
शरन्मृगाङ्कं नलिनी न चापि ।
शरत्प्रतापं सहते न लोकः
प्रियं शरद्वर्णनमेव नस्ते ॥६९॥

अर्हर्दिवं सम्पठितं प्रगीतं
काव्यं तवाबाल्यत एव यन्मे ।
तत्रैव भूयोऽपि मनःप्रसक्तिः
एकस्थसौन्दर्य–दिदृक्षयेव ॥७०॥

(६७) कु. ६–३७...४६, पू. मे. ३१...४१, उ. मे. १...१४,
कु. ७–३.
(६८) र. ७–२४; कु. ७–७९.
(६९) र. ५–१७, र. ६–४४, ऋ. (७०) कु. १–४९.

६७ तुमने औषधिप्रस्थ (हिमालयकी राजधानी) का सुन्दर वर्णन कर, उज्जयिनीका उत्तम चित्रण कर और प्रिया अलका का सुन्दर दर्शन देकर, मानों शब्दमय स्वर्गही निर्माण किया है।

६८ तुम्हारे काव्यके स्त्रीवर्णनों में पावित्र्य और सौंदर्यकला का युगुल, मेरु पर्वतके परिसर में परिभ्रमण करनेवाले परस्पर-संलग्न दिन और रात्रिके युगुलसा विराजता है।

६९ शरद्मेघ की याचना चातक भी करता नहीं। शरच्चन्द्र की प्रार्थना नलिनी (चन्द्रविकासिनी कमललता) भी करती नहीं। शरद्कालका दाह लोग सहन करते नहीं। परन्तु तुम्हारा शरद्वर्णनही केवल हमें अति प्रिय लगता है।

७० मैं अपनी बाल्यावस्थासे दिनरात तुम्हारे काव्यका पठन और गायन करते आया। फिर भी उसी काव्य में मेरे मन की आसक्ति है, मानों उसे सारा सौंदर्य एकस्थान में संचित देखने की इच्छा है।

त्वत्काव्यसौन्दर्यनिरीक्षणेन
आश्चर्य–विस्फारित–नेत्रपद्मः ।
सदैव सर्वोऽपि रसज्ञवर्गः
चित्रार्पितारम्भ इवावतस्थे ॥७१॥

त्वत्काव्यसन्मन्दिरमेधमानं
संसेवमानैर्विविधैः रसज्ञैः ।
सिद्धाश्रमं शान्तमिवेत्य सत्त्वैः
नैसर्गिकोऽप्युत्ससृजे विरोधः ॥७२॥

विलोकयन्ती परमादरेण
त्वत्काव्यगौरीं प्रतिभा मदीया ।
भूतार्थशोभा ह्रियमाणभावा
प्रसाधने न क्षमते क्षमाऽपि ॥७३॥

तां तामवस्थां प्रतिपद्यमानं
विष्णोरिवाब्धेरथवाऽतिदिव्यम् ।
काव्यस्य ते चानवधारणीयम्
ईदृक्तया रूपमियत्तया वा ॥७४॥

सर्वोपमाद्रव्य–समुच्चयेन
यथाप्रदेशं विनिवेशितेन ।
त्वया विधात्रेव विनिर्मिताऽसौ
स्वकाव्यसृष्टिः खलु पार्वतीव ॥७५॥

(७१) र. २–३१. (७२) र. ६–४६. (७३) कु. ७–१३.
(७४) र. १३–५. (७५) कु. १–४९.

७१ तुम्हारे काव्यका सौंदर्य निरीक्षण करते ही, सारे रसज्ञवर्गके नेत्रकमल सदैव आश्चर्यसे विस्फारित होते हैं और वे चित्र के समान (स्तब्ध) होते हैं।

७२ तुम्हारे सुखसमृद्धिपूर्ण काव्यरूप शुभमन्दिर की सेवा करने वाले नानाविध रसज्ञोंने, शान्त सिद्धाश्रम में रहनेवाले प्राणियोंके समान, पारस्परिक नैसर्गिक विरोध का त्याग कर दिया।

७३ तुम्हारी काव्यरूप गौरी की ओर, परम आदरसे मेरी प्रतिभा जब देखने लगती है, तो उस ( काव्य गौरी ) की वास्तविक शोभासे ही उसके सारे भाव आकर्षित हो जाते हैं और समर्थ होते हुए भी उसका प्रसाधन करने में वह समर्थ नहीं होती।

७४ विष्णु अथवा समुद्र के अतिदिव्य रूप के समान, अन्यान्य अवस्थाको धारण करनेवाले, तुम्हारे काव्यका स्वरूप, किसी विशेष अवस्थामें या किसी विशेष मर्यादा में, आकलन नहीं किया जा सकता है।

७५ विधाताने जिस प्रकार सर्व उपमा साहित्य यथा योग्य स्थानोंमें रखकर पार्वती को निर्माण किया, उसी प्रकार तुमने अपनी काव्य सृष्टिका निर्माण किया है।

सन्मङ्गलस्नानविशुद्धगात्री
आमुच्यमानाभरणेव गौरी ।
विशुद्धवर्णा तव काव्यवाणी
मनोहरालंकरणा चकास्ति ॥७६॥

लावण्यसौन्दर्यरसानुविद्धा
मच्चित्तबिम्बे कविता त्वदीया ।
उद्बिम्बिता, दर्पणमादधाना
विवृद्धशोभेव विभाति गौरी ॥७७॥

वैदर्भ-निर्दिष्ट-पथेन यान्ती
क्लृप्ताङ्गरागोत्तमसौकुमार्या ।
धीरेव कन्या तव काव्यवाणी
शृंगारचेष्टा विविधा तनोति ॥७८॥

सञ्चारिणी सद्हृदयावकाशं
गीर्वाण-वाणी-रसिकोत्तमानाम् ।
आरक्तभावं सहसा तनोति
प्रभा पतङ्गस्य तवापि वाणी ॥७९॥

(७६) कु. ७-११. (७७) कु. ७-२६.
(७८) र. ६-३; र. ६-६०; र. ५-३८; र. ६-१२.
(७९) र. २-१५.

७६ मंगल स्नान से विशुद्ध गात्र-युक्त और आभरण धारण करनेवाली गौरी के समान, तुम्हारी विशुद्धवर्णा [वर्ण=(१) शब्द, (२) रंग] और (उपमा उत्प्रेक्षादि) मनोहर अलंकारयुक्त वाणी विराजती है।

७७ लावण्य, सौंदर्य और रससे युक्त तुम्हारी कविता, मेरे चित्त रूप दर्पण में प्रतिबिम्बित होती है, तब (उन्ही गुणोंसे युक्त) हाथ में दर्पण धारण करनेवाली गौरी के समान विराजती है।

७८ वैदर्भनिर्दिष्ट मार्ग से (वैदर्भी रीति से) चलने वाली, अंगराग धारण करनेवाली और उत्तम सौकुमार्य से युक्त तुम्हारी काव्यवाणी (उन्ही गुणोंसे युक्त) धीर कन्याके समान, विविध शृंगारचेष्टाएं व्यक्त करती है।

७९ सज्जनोंके हृदय जैसे (पवित्र विशाल) आकाश में सञ्चार करनेवाली सूर्यकी प्रभा जिस प्रकार आरक्तता निर्माण करती है, उसी प्रकार गीर्वाण वाणी के रसिकोत्तमों के पवित्र हृदयरूप आकाश में सञ्चार करनेवाली तुम्हारी कविता भी (अन्तःकरण में) आरक्त भाव (अनुराग) निर्माण करती है।

त्वदीयवाणी–मधुमाधुरी सा
येनानुभूता सकृदेव दैवात्
द्राक्षां स रूक्षां मनुते मनुष्यः
सुधां सुधामेव सुधाशनोऽपि ॥८०॥

आस्वादिता शारद–पुष्प–माध्वी
आलिङ्गिता शारद–चन्द्र–लक्ष्मीः ।
आलोकिता शारद–हास्य–कान्तिः
येनानुभूता तव शारदा सा ॥८१॥

निपीय काव्यं रसवत् त्वदीयं
मच्चित्तवृत्तिर्न समीहतेऽन्यत् ।
न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं कांक्षति षट्पदाली ॥८२॥

काव्यं त्वदीयं हि निषेव्य रम्यं
कवीन्द्र ! मन्ये मुदितान्तरात्मा ।
ऋद्धं सुराज्यं च पदं तथैन्द्रं
नूनं स्वहस्तागतमेव लोके ॥८३॥

वाणीश्रियाऽलङ्कृति–हैमवृष्टिः
त्वत्काव्यकोशे बत सम्प्रकीर्णा ।
विदग्धकौत्साय तु सा समग्रा
त्वया प्रदत्ता रघुणेव विद्वन् ॥८४॥

(८२) र. ६–६९. (८३) र. २–५०. (८४) र. ५–३०.

८० तुम्हारी वाणी की मधुमाधुरीका दैवयोगसे एक बार भी जिसने अनुभव किया, वह मनुष्य द्राक्षा को भी रूक्ष मानता है और सुधा सेवन करनेवाला (देव) सुधा को 'सुधा' (चूना) मानता है।

८१ जिसने तेरी शारदा (वाणी) का अनुभव लिया, उसने मानों शारद (प्रफुल्ल) पुष्प की माध्वी (मधूक पुष्प में निर्माण होने वाला मध) का आस्वाद लिया, अथवा शरच्चन्द्रकी लक्ष्मी (शोभा) का अलिंगन पाया, अथवा साक्षात् शारदा की हास्यकान्ति का अवलोकन किया।

८२ तुम्हारे रसयुक्त काव्य का पान करने पर मेरी चित्तवृत्ति अन्य किसी की इच्छा नहीं रखती। प्रफुल्ल आम्रवृक्ष पर आयी हुई भ्रमरपङ्क्ति दूसरे वृक्ष की आकांक्षा नहीं रखती।

८३ हे कवीन्द्र! तुम्हारे रम्य काव्य का सेवन कर, मेरा अन्तःकरण इतना मुदित होता है कि, संसार में समृद्ध सुराज्य या उसके समान इन्द्रपद मानों मेरे हाथ में आयासा मुझे प्रतीत होता है।

८४ वाणीरूप लक्ष्मीने अलंकाररूप सुवर्णवृष्टि तुम्हारे काव्यकोश में की। और हे विद्वन्! तुमने रघु के समान वह (अलंकाररूप सुवर्णवृष्टि) विद्वद्गणरूप कौत्स को समग्रतया समर्पण की।

आरूढमद्रीनुदधीन् वितीर्णं
सुरोरगाणां वसती प्रविष्टम् ।
यशो रघोस्तस्य तथा तत्रापि ।
न वा परिच्छेत्तुमियत्तयालम् ॥८५॥

पङ्केरुहान्तःस्थित–तोयबिन्दु–
स्फुटीभवच्चन्द्रविभाऽभिरामम् ।
यशस्त्वदीयं कविचक्रवर्तिन्
विभाति काव्यज्ञमनोरविन्दे ॥८६॥

स्फुरत्प्रभामण्डलमासमन्तात्
ज्योतिः प्रभासन्तरलं विभाति ।
सारस्वतं तत् कवितार्धनारी–
नटेश ! चन्द्राभरणं तवेव ॥८७॥

(८५) र. ६.–७७. (८७) र. ३–६०. शा. १–२६.

८५ तुम्हारा यश रघुके यश की भाँति, पर्वतोंपर आरूढ हुआ, समुद्रोंको लांघ गया, देवलोक तथा भुजंगलोक में प्रविष्ट हुआ। किसी सीमासे उस यश को सीमित करना असंभवनीय है।

८६ हे कविचक्रवर्ती ! कमलपुष्पके अंतरंग में संचित जलबिंदु में स्पष्ट दिखनेवाली चन्द्रप्रभासा रमणीय तुम्हारा यश, काव्यज्ञोंके हृदयारविंद में विराजता है।

८७ हे कवितार्धनारीनटेश ! वह प्रभा–तरल और आसमंतात् मंडलाकार प्रस्फुरित, सारस्वत ज्योति ही तुम्हारा चन्द्राभरण है।

## ॥ ६ ॥

### हृदगत–रहस्यम्

गीर्वाणसाहित्य–तमिस्रकाले
सम्प्रत्यकस्मात्तव काव्यदीप्तिः ।
प्रकाशयत्यान्तरमन्दिराणि
सञ्चारिणी दीपशिखेव रात्रौ ॥८८॥

दिलीपराजेन वसिष्ठधेनुः
संसेविता तेन यथातिभक्त्या ।
वाङ्नन्दिनी ते कवितामहर्षे !
संसेवनीया रसिकैस्तथैव ॥८९॥

त्वत्काव्यधेनुं समुपास्य लोके
बुधैरवाप्ता धन–मान–पूजाः ।
न केवलानां वचसां प्रसूतिः
गौस्ते कवे ! कामदुघा प्रसन्ना ॥९०॥

कवीन्द्र ! गीर्वाणसरस्वतीयं
त्वयार्चिता सर्वविधैर्हि दिव्यैः ।
शब्दार्थरत्नाभरणैरशेषैः
इच्छाविभूत्योरनुरूपमेव ॥९१॥

(८८) र. ६–६७. (८९) र. २.
(९०) र. २–६३. (९१) कु. ७–२९.

## ॥ ६ ॥

## हृद्गत-रहस्यम्

८८ गीर्वाण साहित्यके साम्प्रतके इस तमिस्त्रकाल में, तुम्हारी काव्यदीप्ति रात्रि-सञ्चारिणी दीपशिखा के समान, अन्तःकरणरूप मंदिरोंको अकस्मात् प्रकाशित करती है।

८९ हे कवितामहर्षि ! जिस प्रकार दिलीप राजाने वसिष्ठ–धेनु नन्दिनी की सेवा अतिभक्तिसे की, उसी प्रकार तुम्हारी वाणीरूप नन्दिनी की सेवा, रसिकों को सदैव करना चाहिए।

९० हे कवि ! तुम्हारी काव्यरूप धेनु की उपासना कर, विद्वानों ने धन, सम्मान और पूजा प्राप्त की। तुम्हारी वाणीरूप गौ [गौ = (१) वाणी (२) गाय] केवल शब्दोंको ही प्रसूत करनेवाली नहीं। प्रसन्न होने पर वह मानों कामधेनु ही है॥

९१ हे कवीन्द्र ! तुमने इस गीर्वाणसरस्वती की पूजा सर्वविध दिव्य शब्दार्थरूप रत्नालंकारोंसें अपनी इच्छा और ऐश्वर्य के अनुरूप ही की है।

कालप्रभावादवहेल्यमानं
त्वत्काव्यपीयूषमिहैव देशे ।
दृष्ट्वा व्यथेऽन्तःकरणेऽहमद्धा
भोगीव मन्त्रौषधिरुद्धवीर्यः ॥९२॥

पाश्चात्य–साहित्य–दृढानुरागात्
नाद्यापि बध्नाति हि लोकवृत्तिः ।
रघौ कुमारे तव हन्त दूते
कुमुद्वती भानुमतीव भावम् ॥९३॥

शाकुन्तलं मालविकाग्निमित्रं
त्यक्त्वा त्वदीयं च तथोर्वशीयम् ।
आङ्ग्लीय–नाटचाभिरतिर्व्यनक्ति
लोकस्य, यद् भिन्नरुचिर्हि लोकः ॥९४॥

त्वदीय–सत्काव्य–विहीनभूतः
कवीन्द्र ! भूयाद्यदि दिव्यकोशः ।
सारस्वतस्तर्हि स हन्त भायात्
स्तम्बेन नीवार इवावशिष्टः ॥९५॥

त्वयार्चिता या विबुधेन वाणी
सास्वाद्यतामद्य गतैव नूनम् ।
कालस्य हा सर्वहरस्य तस्य
सुराद्विपश्चान्द्रमसी सुधेव ॥९६॥

(९२) र. २–३२. (९३) र. ३–३६. (९४) र. ६–३०.
(९५) र. ५–१५. (९६) र. २–३९.

९२ इसी देश में, कालप्रभावके कारण तुम्हारे काव्यरूप अमृत की अवहेलना होती हुई देखकर, मंत्र और औषधि से कुंठितसामर्थ्य भुजंग सा मैं अंतःकरण में व्यथित होता हूं ।

९३ पाश्चात्यसाहित्यके दृढ अनुरागके कारण, जिस प्रकार कुमुद्वती सूर्य से प्रेम नही करती, उसी प्रकार अद्यापि लोकवृत्ति तुम्हारे रघुवंश, कुमारसंभव तथा मेघदूत को भक्तिभाव से नहीं देखती ।

९४ तुम्हारे 'शाकुन्तल', 'मालविकाग्निमित्र' तथा 'विक्रमोर्वशीय' को त्यागकर, आङ्ग्लीय नाटयों में दिखनेवाली आधुनिक लोगोंकी अभिरुचि "भिन्नरुचिर्हि लोकः" इस तुम्हारे सिद्धान्तको ठीक व्यक्त करती है ।

९५ हे कवीन्द्र ! सरस्वतीका दिव्य कोश, यदि तुम्हारे काव्यसे विरहित हो जाय, तो वह 'स्तम्बावशिष्ट नीवार' ( धानविरहित बालें) के समान दिखेगा ।

९६ तुम्हारे जैसे विबुध [ (१) विद्वान (२) देव ] ने जिस संस्कृत वाणीकी अर्चना की, वही आज, सर्वहर कालका आस्वाद्य भक्ष्य हुई है । जिस प्रकार देवद्रोही राहु की चांद्रमसी सुधा भक्ष्य होती है ।

विलोपकाले सुरवाच एते
स्मरन्ति यत्त्वां कविराज ! लोकाः ।
तस्यास्तदुत्कर्षविधेः स्फुटानि
प्रसादचिह्नानि पुरःफलानि ॥९७॥

गन्धर्वतस्तेन हि राघवेण
त्वत्तस्तथाऽलभ्यत भारतेन ।
गान्धर्ववत् काव्यमयं शुभास्त्रं
न येन हिंसा विजयश्च हस्ते ॥९८॥

चिराय विश्लेषितयोरभाग्याद्
गीर्वाणवाग्-भारतदेशयोश्च ।
लब्धस्वराज्ये नव-भाग्यकाले
योगस्तडित्तोयदयोरिवाऽस्तु ॥९९॥

काव्यश्रुतीनां प्रणवाय तुभ्यं
कविप्रसूणां मनवेऽग्रगाय ।
वर्णाश्रमाणां गुरवे सदैव
श्रीकालिदासाय नमो नमस्ते ॥१००॥

प्राणात्यये क्वापि जनुर्भवेच्चेत्
देशान्तरे मे सुरवाग्विहीने ।
त्वत्काव्यभक्ति न तथापि जह्याद्
मनो हि जन्मान्तर-सङ्गतिज्ञम् ॥१०१॥

(९७) र. २–२२. (९८) र. ५–५७. (९९) र. ६–६५.
(१००) र. १–११, र. ५–१९. (१०१) र. ७–१५.

९७ हे कविराज ! सुरवाणी के इस विलोप-कालमें, ये लोग तुम्हारा, स्मरण कर रहे हैं, तो इससे संस्कृत वाणी के उत्कर्ष के भावी फलसूचक प्रसादचिन्ह स्पष्ट हुए हैं ।

९८ रघुपुत्र अजने, उस ( चित्ररथ ) गन्धर्वसे जिस प्रकार गांधर्वास्त्र प्राप्त किया, उसी प्रकार भारतने तुझसे ऐसा काव्यमय शुभास्त्र प्राप्त किया है कि जिससे हिंसाके विना विजय हस्तगत होती है ।

९९ दुर्भाग्य कारण चिरकालसे संस्कृत भाषा और भारत देशका वियोग हुआ । (अब) स्वराज्यप्राप्ति के कारण नवोदित इस भाग्य कालमें "तडित्–तोयद" ( विद्युत् और मेघ ) सा उनका पुनश्च संयोग हो ।

१०० हे काव्यरूप श्रुति के प्रणव ! कविरूप नृपतियोंमें अग्रेसर मनु, ! और वर्णाश्रमधर्मके गुरु ! श्रीकालिदास ! तुम्हे सदैव मेरा प्रणाम रहे ।

१०१ प्राण–प्रयाण के बाद, मेरा जन्म यदि किसी संस्कृतभाषा-विरहित अन्य देश में हो, तो भी यह "जन्मान्तर–सङ्गतिज्ञ" ( पूर्वजन्मकी सङ्गतिका स्मरण रखनेवाला ) मेरा मन तुम्हारे काव्यकी भक्ति नहीं छोडेगा ।

## ॥७॥

## स्तोत्राञ्जलिः (अष्टकम्)

कालिदास ! कविचन्द्र ! मामकं
चन्द्रकान्त–मणि–पेशलं मनः ।
स्यन्दते तव वचःसुधाकर–
स्पर्शलेश–वशतो महामुदम् ॥१०२॥

कविकुलगुरो ! काव्ये दिव्येऽरविन्द–मनोहरे
तव रसविदां सर्वेषां ते मनःकलहंसकाः ।
प्रतिपदमनस्यूतानर्थान् रसातिपरिप्लुतान्
बिसकिसलय–प्रख्यानन्तःसुखं परिभुञ्जते ॥१०३॥

भूयांसस्ते नभसि मुरजोन्नादिनो वारिवाहाः
आकर्षन्तो हृदयमनिशं बर्हिणां चातकानाम् ।
तेष्वेकस्मिन् परमियमहो प्रीतिरात्यन्तिकी मे
येनोद्गढाः कविकुलगुरोः सान्द्रकारुण्यवाचः ॥१०४॥

त्वद्रूपेण कवीन्द्र ! नूनमभवच्चन्द्रः स कान्तिप्रदः
शृंगारैकरसः स्वयं नु मदनो, मासो नु पुष्पाकरः ।
गैर्वाणी–सुकवि–प्रजापतिरसौ नो चेत् कथं जायतां
लोकेऽस्मिन् कवितोर्वशीव मधुरा शृंगारसाराऽपरा ॥१०५॥

(१०५) विक्र. १–१०.

# ॥ ७ ॥

## स्तोत्राञ्जलिः ( अष्टकम् )

१०२ हे कविचन्द्र कालिदास! मेरा मन चन्द्रकान्त मणि जैसा पेशल है। अतः तुम्हारे वचन रूप सुधाकर (चन्द्र) का स्पर्श मात्र होते ही उस से महान् प्रमोदका झरना फूट पडता है।

१०३ हे कविकुलगुरु! तुम्हारे कमल जैसे सुन्दर दिव्य काव्य में समस्त रसिकोंके मानसरूप कलहंस, प्रत्येक पदमें अनुस्यूत बिस-किसलयसे रसपरिप्लुत, अर्थोंका सुखसे आस्वाद लेते हैं।

१०४ आकाश में मृदंग से निनाद करनेवाले और मोर तथा चातक जैसे पक्षियों के हृदय को नित्य आकर्षित करनेवाले, अनेक मेघ होते हैं। उनमें से उस एक मेघपर मेरी आत्यंतिक प्रीति है, जिसने कि कविकुलगुरु की सान्द्रकारुण्ययुक्त वाणी को धारण किया।

१०५ हे कवीन्द्र! सच मुझ ही तुम्हारे रूप में वह कान्तिप्रद चंद्र, शृंगार–रसमय मदन या वसंत मास ही संस्कृतकवि–रूप प्रजापति हुआ था। अन्यथा इस संसार में प्रति ऊर्वशी के समान शृंगार-सारभूत कविता कैसे निर्माण होती?

मुग्धा मालविकाग्निमित्रपुरतः सा नृत्यरङ्गस्थिता
बालेवेन्दुमती स्वयंवर-शुभास्थानप्रविष्टाऽथवा ।
भीतिव्याकुलितोर्वशी सुललिता श्रीविक्रमाश्वासिता
मोहं ते रसराजराज ! कविता चित्ते विधत्ते मम ॥१०६॥

क्रन्दन्तीव रतिः स्ववल्लभ-परिष्वङ्गाय भावातुरा
म्लायन्तीव च यक्षिणी प्रियकरालोके चिरं वञ्चिता ।
मूर्च्छन्ती जनकात्मजा रघुपतित्यक्तेव वा कानने
कारुण्यैकरसा दुनोति कविता ते मानसं मामकम् ॥१०७॥

नृत्यन्तीव सरस्वती मृदुपदन्यासैः प्रसन्नान्तरा
गायन्तीव च पार्वती हरगुणानालाप-तानादिभिः ।
क्रीडन्तीव शकुन्तला मृग-लता-मित्रैस्तपःकानने
हे साहित्यजगद्गुरो ! सुकविता बध्नाति ते मे मनः ॥१०८॥

काव्यं ते कविसार्वभौम ! कविता-लास्यैक-विद्यागुरो !
सौन्दर्योपनिषद्रहस्यमथवा माधुर्यमन्त्रास्पदम् ।
वाणीनिश्वसितं नु नारद-रणद्वीणा-परिक्वाणनम्
किं वा मन्मथताण्डवं किमथवा यक्षाङ्गनाचुम्बनम् ॥१०९॥

समाप्तमिदम् अष्टोत्तरश्लोकात्मकं कालिदासरहस्यं खण्डकाव्यम् ।

(१०६) माल २-६, र. ६-१०, विक्र. १-७.
(१०७) र. ४, उ. मे. २-१३. (१०८) कु. ५-५६ शा. १

१०६ हे रसराज–राज ! ( शृंगाररसके राजा ) नृत्यरंग में अग्नि-मित्र के सामने खडी हुई मालविका, स्वयंवर के शुभ मण्डप में प्रविष्ट बाला इन्दुमती अथवा श्रीविक्रम द्वारा आश्वासित भीति व्याकुला तथा सुललिता ऊर्वशी, इनके समान तुम्हारी कविता मेरे चित्त में मोह उत्पन्न करती है।

१०७ अपने ( अनंग ) प्रियकरको आलिंगन देने के लिये क्रन्दन करनेवाली भावातुर रति, प्रियकरके दर्शन से चिरकाल वञ्चित होनेके कारण म्लान हुई याक्षिणी अथवा रघुपति द्वारा वन में त्यागने पर मूर्छित हुई जनकात्मजा सीता, इनके समान कारुण्य–रसमयी तुम्हारी कविता भी मेरे अंतःकरणको व्यथित करती है।

१०८ हे साहित्य–जगद्गुरु ! प्रसन्न अंतःकरणसे मृदुपदन्यास सहित नृत्य करती हुई सरस्वती, आलाप तान आदि सहित शंकरका गायन करती हुई पार्वती अथवा तपोवनमें मृग–लता जैसे मित्रोंसें खेलती हुई शकुन्तला, इनके समान तुम्हारी कविता मेरे अंतःकरणको बद्ध करती है।

१०९ हे कवि–सार्वभौम ! हे कवितालास्यैक–विद्यागुरु ! (कविता देवी को नृत्यकी शिक्षा देने वाले आचार्य ) तुम्हारा काव्य मानो किसी अनोखे सौन्दर्योपनिषदका रहस्य, माधुर्य मंत्र का निवास, वाग्देवीका निश्वास, नारदकी वीणा का झंकार, मन्मथका ताण्डव नृत्य है, या यक्षांगना का चुंबन है। (ऐसे संदेह मेरे मन में निर्माण होते हैं)।

## ॥८॥

# आश्चर्यमयी कालिदासस्य कविता

कालिदासस्य कविता काचिदाश्चर्यशृङ्खला
याऽणुप्रमाणं बध्नाति मनः पवनचञ्चलम् ॥१॥

कालिदासस्य कविता काचिदाश्चर्यवल्लरी
फलन्ति यस्यां रसवत्–फलानीव जगन्त्यपि ॥२॥

कालिदासस्य कविता काचिदाश्चर्यमालिका ।
अनेकभावगन्धाढ्या न म्लाना च युगेष्वपि ॥३॥

कालिदासस्य कविताऽऽश्चर्यकल्पलता ध्रुवम् ।
असंकल्पितमप्यर्थं पुरः स्थापयतीव या ॥४॥

कालिदासस्य कविता ह्याश्चर्यसरसी ध्रुवम् ।
मज्जन्ति यत्र सानन्दं वयांसीव मनांस्यपि ॥५॥

कालिदासस्य कविता काचिदाश्चर्यसुन्दरी ।
या जहाति न लावण्यं स्वीयं कल्पशतेष्वपि ॥६॥

कालिदासस्य कविता काचिदाश्चर्यगायनी ।
याऽऽवर्जयति चेतांसि स्वरैरिव पदैरपि ॥७॥

## ॥ ८ ॥

# आश्चर्यमयी कालिदासस्य कविता

१ कालिदास की कविता एक अद्भुत शृंखला जैसी है, जो कि, (हमारे) अणु के समान (सूक्ष्म) और वायु के समान चंचल मन को बांध सकती है।

२ कालिदास की कविता एक अद्भुत लता जैसी है, जिस में कि रसपूर्ण फलों के समान अनेक विश्व फलते है।

३ कालिदास की कविता एक अद्भुत मालिका है, जो कि अनेक भावरूप सुगन्धों से सम्पन्न है और युगों के बाद भी म्लान नहीं हुई।

४ कालिदास की कविता एक अद्भुत कल्पलता है, जो कि असंकल्पित विषयों को भी समक्ष प्रस्तुत कर देती हैं।

५ कालिदास की कविता अद्भुत सरोवर सी है, जिस में कि पंछियों के समान लोगों के मन, आनंद से मज्जन करते है।

६ कालिदास की कविता एक अद्भुत सुन्दरी ही है, जो कि सैंकडों कल्पान्त तक अपना लावण्य नहीं छोडती।

७ कालिदास की कविता एक अद्भुत गायिका है, वह (गायिका) जिस प्रकार स्वरोंसे चित्त आकर्षित करती है उसी प्रकार यह (कालिदास की कविता) अपने शब्दों से भी चित्त आकर्षित करती है।

कालिदासस्य कविता काचिदाश्चर्यनर्तकी ।
कटाक्षैरिव सद्भावान् पदन्यासैस्तनोति या ॥८॥

कालिदासस्य कविता काचिदाश्चर्यपण्डिता ।
या शास्त्रबोधं तनुते कान्तासम्मितमुत्तमम् ॥९॥

कालिदासस्य कविता नूनं रघुवरूथिनी ।
जयत्येव मनोराज्यं या रसज्ञ–क्षमाभृताम् ॥१०॥

कालिदासस्य कविता ह्याश्चर्यशबरी ध्रुवम् ।
भुङ्क्ते श्रीरामवल्लोको यदुच्छिष्टं वचोरसम् ॥११॥

कालिदासस्य कविता ह्याश्चर्योपनिषद् ध्रुवम् ।
यत्रानुभूयते किञ्चिद् ब्रह्मास्वाद–सहोदरम् ॥१२॥

कालिदासस्य कविताऽऽश्चर्य–वेदचतुष्टयी ।
या पौरुषेयी सद्धर्म–नीतिमार्ग–प्रदीपिका ॥१३॥

कालिदासस्य कविता नूनं सञ्जीवनी कला ।
यत्संस्कारेण लोकोऽयं परमामृतमश्नुते ॥१४॥

८ कालिदास की कविता एक अद्भुत नर्तकी है, वह (नर्तकी) जिस प्रकार कटाक्षोंसे भाव व्यक्त करती है उसी प्रकार यह (कालिदास कविता) शब्द योजना से सद्भावों को व्यक्त करती है।

९ कालिदास की कविता एक अद्भुत पण्डिता है, जो कि प्रिय पत्नी के उपदेश जैसा उत्कृष्ट रीति से शास्त्रबोध कराती है।

१० कालिदास की कविता रघु की सेना जैसी है, जो कि रसज्ञरूप राजाओं के अन्तःकरण रूप राज्य को निश्चित ही जीत लेती है।

११ कालिदास की कविता एक अद्भुत शबरी ही है, श्रीरामचन्द्र ने जिस प्रकार उस (रामायण की शबरी) का उच्छिष्ट सेवन किया उसी प्रकार, लोग इसके (कालिदास की कविता के) साहित्य रस का उच्छिष्ट सेवन करते हैं।

१२ कालिदास की कविता निश्चित ही एक अद्भुत उपनिषद सी है, जिस में कुछ 'ब्रह्मास्वादसहोदर' (ब्रह्मानंद के समान) अनुभव (रसास्वाद के रूप में होता है।

१३ कालिदास की कविता एक अद्भुत वेद–चतुष्टयी है, जो कि पौरुषेयी (पुरुष निर्मित) और सद्धर्म तथा नीति मार्ग की प्रदीपिका ही है।

१४ कालिदास की कविता मानों सञ्जीवनी कला ही है, जिस के संस्कार से लोग परमामृत [(१) परम अमृत (२) श्रेष्ठ अमरपद] का लाभ कर लेते हैं।

कालिदासस्य कविता काचिदाश्चर्ययोगिनी ।
या प्रत्यक्षाणि कुरुते ह्यतीतान्यागतान्यपि ॥१५॥

कालिदासस्य कविता काचिदाश्चर्यदेवता ।
असंस्कारवतां चापि या प्रचोदयते धियम् ॥१६॥

कालिदासस्य कविता मूर्तिरद्भुतवामनी ।
पदं धत्ते रसज्ञस्य हृदि मूर्ध्नीव या बलेः ॥१७॥

कालिदासस्य कविता मूर्तिः काचन वैष्णवी ।
पदलग्ना ह्यर्थलक्ष्मीः यत्र भाति मनोरमा ॥१८॥

कालिदासस्य कविता मूर्तिः काचन शाम्भवी ।
रसगङ्गा स्थिता मूर्ध्नि यत्र सा हृदयंगमा ॥१९॥

कालिदासस्य कविता माधुर्यरसनिर्झरी ।
सौन्दर्यवल्लरी किं वा वाङ्मयी मूर्तिरैश्वरी ॥२०॥

* * *

१५ कालिदास की कविता एक अद्भुत योगिनी है, जो कि भूत और भविष्य को भी प्रत्यक्ष ( उपस्थित ) करती है।

१६ कालिदास की कविता एक अद्भुत ( गायत्री ) देवता है, जो कि ( वैदिक ) संस्कारहीन लोगों की बुद्धि को भी प्रेरणा देती है।

१७ कालिदास की कविता एक अद्भुत वामनमूर्ति है, जिस प्रकार उस ( विष्णु अवतार ) वामन मूर्ति ने बलि के मस्तक पर पदन्यास किया उसी प्रकार यह ( कालिदास की कविता ) रसज्ञों के हृदय में पदन्यास करती है (स्थान पाती है )।

१८ कालिदास की कविता एक अनोखी विष्णुमूर्ति है। उस भगवान विष्णु की मूर्ति के पदों के ( चरणों के ) पास जिस प्रकार भगवती लक्ष्मी नित्य विराजती है, उसी प्रकार इस (कालिदास की कविता) के पदों में (शब्दों में) मनोहर अर्थलक्ष्मी (अर्थ की सुन्दरता) विराजती है।

१९ कालिदास की कविता एक अनोखी शम्भुमूर्ति है, जिस के मस्तक पर वह हृदयंगम रस रूप गंगा बैठी हुई है।

२० कालिदास की कविता माधुर्यरस का झरना, सौंदर्य की वल्लरी अथवा ईश्वर की शब्दमयी मूर्ति है।

* * *

सत्कवीनां सुकविता काचिदाश्चर्य–चन्द्रिका ।
अन्तः प्रविश्य या भिन्ते तदन्तरतरं तमः ॥२१॥

सत्कवीनां सुकविताऽऽश्चर्यकादम्बिनी ध्रुवम् ।
रसवर्षेण या सर्वं शमयत्यान्तरं रजः ॥२२॥

सत्कवीनां सुकविता काचिदाश्चर्यपद्धतिः ।
ययाऽऽरोहति तद्दिव्यं परं धाम मनोरथः ॥२३॥

सत्कवीनां सुकविता सा दैवी सम्पदेव हि ।
रसास्वादप्रदा चापि या विमोक्षाय कल्पते ॥२४॥

सत्कवीनां सुकविता सच्चिदानन्दमञ्जरी ।
पीयषलहरी किं वा वैखरी पारमेश्वरी ॥२५॥

२१ सत्कवियों की कविता एक अद्भुत चन्द्रप्रभा है; जो कि अन्तःकरण में प्रविष्ट होकर उस अन्तर्गत तमोगुण रूप अन्धकार का भेद करती है।

२२ सत्कवियों की कविता निश्चित ही एक अद्भुत मेघमाला है, जो कि रस वर्षा कर, अन्तरंग के रजोगुण रूप रज का शमन करती है।

२३ सत्कवियों की कविता एक अद्भुत मार्ग सी है, जिस मार्ग से मन रूप रथ उस दिव्य परम धाम तक आरोहण करता है।

२४ सत्कवियों की कविता वह (गीता के १६ वें अध्याय में वर्णन की हुई, दैवी सम्पद् ही है, जो कि रसास्वाद देते हुए भी मोक्ष देने में समर्थ है।

२५ सत्कवियों की कविता, सच्चिदानन्द की मञ्जरी, अमृत की लहरी अथवा परमेश्वर की वैखरी (वाणी) है।

# उपसंहार:

गीर्वाण–वाङ्मय–सरोज–मधुव्रतेन
श्रीकालिदास–कविता–रसलोलुपेन ।
वर्णेकरान्वयज भास्करनन्दनेदं
श्री–श्रीधरेण दशमं शतकं प्रणीतम् ॥१॥

अष्टादशशतमिते शाकेऽशीतियुते शुभे (१८८०)
यदनन्तचतुर्दश्या: पञ्चषैर्दिवसैरिदम् ॥
कालिदासरहस्याख्यं कालिदासोत्सवाय च
गुम्फितं खण्डकाव्यं मे, प्रीतयेऽस्तु च तद्विदाम् ॥२॥

* * *

सरस्वतीप्रसादानां* येषां केवलमिच्छया
खण्डकाव्यमिदं कर्तुं समर्थ: सहसाऽभवम् ॥३॥

तेषामाचार्यवर्याणां मत्पूज्यानां पदाब्जयो:
कालिदासरहस्याख्यं काव्यमेतत् समर्पये ॥४॥

* * *

प्रभो ! तव कृपां विना तृणकणोऽपि न स्पन्दते
सहस्रकिरणोऽपि न क्षणशतांशमुद्भासते ।
न चेन्दुरपि राजते न खलु गीष्पतिर्भाषते
कथं नु जडधेरित: स्फुरतु काव्यगीर्वाणगी: ॥५॥

* (३) सरस्वतीप्रसाद–चतुर्वेदी, प्रधानाचार्य: रायपुरस्थ–शासकीय–संस्कृतमहाविद्यालये ।

# जयगीतम्

जय महामङ्गले !<br>
जय सदावत्सले !<br>
देवि ! परमोज्ज्वले !<br>
भरतभूरूपिणि ! ॥१॥

हिमगिरि–किरिटिनि !<br>
सुर–तटिनिमिलिनि !<br>
जलधि–वलयाङ्कित !<br>
जय जगन्मोहिनि ! भरतभूरूपिणि ! ॥२॥

भ्रमपटल–दारिणि !<br>
मोह–विध्वंसिनि !<br>
जय सदा शारदे !<br>
बुद्धिवलदायिनि ! भरतभूरूपिणि ! ॥३॥

अखिल–खल–मर्दिनि !<br>
सुजन–वलवर्धिनि !<br>
जय समरचण्डिके !<br>
रौद्रतनुधारिणि ! भरतभूरूपिणि ! ॥४॥

सत्यसावित्रि ! जय !<br>
पुण्यगायत्रि ! जय !<br>
विभव–सुख–दात्रि ! जय !<br>
दिव्यतेजस्विनि ! भरतभूरूपिणि ! ॥५॥

वीरवर–सेविते !<br>
योगिजन–चिन्तिते !<br>
देवगण–वन्दिते !<br>
विश्वहितकारिणि ! भरतभूरूपिणि ! ॥६॥

## गोवर्धन-पीठाधीश्वर-श्रीजगद्गुरु-शंकराचार्य श्रीभारतीकृष्णतीर्थ-स्वामिप्रणीता

### आयुष्मत्-श्रीधर-भास्कर-वर्णेकर-विषया

# आशीरभिन्दनपद्यमालिका

बालः श्री-श्रीधराख्यः शुभतरधिषणो ब्राह्मणज्ञातिजन्म-
प्राप्तस्वीयाधिकारं निहितनिजमतिः शाश्वते धर्ममार्गे ।
भक्तिप्रेमप्रभावप्रभवसुचरितैः प्रीणयन् सर्वशिष्टान्
सौजन्यैकप्रधानाखिलविधकलनाऽलंकृतस्वान्तरङ्गः ॥१॥

अभिमानलेशरहितं स्वधर्म-निजसंरक्षती मनुते ।
मनसा, वचसा वक्ति, क्रियया कुरुते, सदैकरूपेण ॥२॥

स्वाभ्यस्तविद्याव्रजचिन्तनादि-सम्पत्तिमित्थं जनतोपकृत्यै ।
अनुग्रहात्मा प्रतिपादयन् यः परोपकारप्रवणान्तरङ्गः ॥३॥

नव्यानि भव्यानि बहूनि खण्डान्यारच्य काव्यानि मनोहराणि ।
उद्युक्त आस्ते दिविषत्प्रसादात् स्वश्रेयसे साधुजनोपकृत्यै ॥४॥

तन्मध्ये श्रीबालगोपाललीला-काव्यग्रन्थं काव्यपीयूषचञ्चुम् ।
अस्मत्तुष्ट्यै ग्रन्थकर्त्तास्यतो द्विः सान्द्रानन्दोद्रेकमामूलचूडम् ॥५॥

आकर्ण्यालोक्यावगाह्यावलोड्य श्रद्धाभक्तिप्रेरितप्रेमभक्तिम् ।
भावं भावं मानसे मोदमाने स्वान्तान्तस्थं व्यञ्जयन्तः स्वभावम् ॥६॥

लोके लौकिककर्मव्रातापेक्षित–सुनैपुणीसत्त्वे
अपि परमार्थपरायण विजयस्वार्भ प्रसादमिहि नित्यम् ।।७।।

जनतोपकारिधिषणाचण भो जनतोपकारिकृतिभिः सततम् ।
जनिमृत्युवार्धितरणे निपुणं श्री–श्रीधरार्भ जयतादनिशम् ।।८।।

परमार्थबोधनकृते करणैकधिया विहाय फलतत्परताम् ।
निखिलप्रयत्नविततीर्विदधच्छ्री–श्रीधरार्भ सफलीभवतात् ।।९।।

परमार्थचिन्तन–परायणतेरितनैज–सर्व–धिषणा–प्रवणः ।
स्थिरमात्मबोधपथिकः स्वधियं श्री–श्रीधरार्भ नय सार्थकताम् ।।१०।।

इति सर्वयत्ननिकुरम्बमरं सफलं विधाय कृतकृत्यतया ।
शमदान्तिमुख्यसुगुणैरखिलैश्चरितार्थतामिहि किशोर सदा ।।११।।

दीर्घायूरोगहैनी–दृढतनु–धिषणा–गीर्बल–स्वापतेया–
द्याकारं मङ्क्षु दत्त्वा जगदुपकृतिकृत्कृत्यकृत्यालिकृत्यै ।
सामग्रीमद्रिजाता–जलधिजनि–गिरः स्वस्वकान्तेन युक्ता
अस्मत्प्रेम–प्रसाद–प्रणयभर–भृतं श्रीधरं पान्त्वजस्रम् ।।१२।।

---

प्रा. श्री. भा. वर्णेकरविरचितां

# जवाहरतरङ्गिणीम् अधिकृत्य

## पं. जवाहरलाल–नेहरू–महाभागानाम् अभिप्रायः

मनाली
कुलु–पंजाब
१८–६–१९५८

प्रिय श्री वर्णेकरजी

आपका पत्र मुझे मिला और उसके साथ कविता की पुस्तक–जवाहरतरङ्गिणी भी मिला–धन्यवाद. आपकी पुस्तक को मैंने पढ़ा–मैं संस्कृत इतनी अधिक नहीं जानता कि उसको अच्छी तरह समझ सकूं। बचपन में कुछ संस्कृत पढी थी. फिर दुर्भाग्य से उसका पढ़ना छूट गया। अकसर मेरी इच्छा हुई कि फिरसे उसके पढ़ने में कुछ समय दूं लेकिन बहुत कामों में फंसा रहा. जो बचपन में कुछ पढ़ा भी उससे अब भी कुछ समझ में सहायता मिल जाती है। इससे कुछ आपकी कविता को समझा और उसको बहुत सुन्दर पाया।

लेकिन आपसे एक शिकायत है। आपने जिस तरह मेरा चर्चा किया है उससे मुझे बहुत लज्जा आई। मैं जानता हूं कि कविता में बातें बढ़ा कर कही जाती हैं, लेकिन वह समय अब नहीं रहा और किसी व्यक्ति की बहुत प्रशंसा करना न उसके लिये और न जनता के लिये अच्छा होता है। मेरा यह कहना आप माफ करेंगे।

मुझे इस बात की खुशी है कि हमारी प्राचीन भाषा संस्कृत आजकल भी इतनी जीवित है और उसके सेवक आप ऐसे कवि और आचार्य हैं।

फिरसे आपको बहुत धन्यवाद.

आपका
जवाहरलाल नेहरू

# श्रीमहाभारतसारः

प्रथमः खण्डः-आदि, सभा, वन, विराटोद्योगात्मकः

द्वितीयः खण्डः-भीष्म, कर्ण, शल्य, सौप्तिक, स्त्रीपर्वात्मकः

तृतीयः खण्डः-शान्ति-अनुशासन-आश्वमेधिक-
आश्रमवासिक-मौसल-महाप्रास्थानिक-
पर्वात्मकः

(पृष्ठसंख्या-१४७५-खण्डत्रयस्य)

सम्पादकमण्डलम्—

(१) पं. वासुदेव गंगाधर जोशी, माहूर

(२) पं. रेणुकादास राजेश्वर-अयाचित (उम्ब्ररखेड)

(३) डॉ. यशवन्त खुशाल देशपाण्डे, एम्. ए., एल्एल्. बी.
डी. लिट्. (यवतमाळ)

(४) प्रा. श्रीधर भास्कर वर्णेकर, एम्. ए., काव्यतीर्थः नागपुरम्,

(५) पं. वा. स. पेण्ढरकर, अमरावती

मूल्यम्— { खण्डत्रयस्य-२४ रुप्यकाः
प्रतिखण्डम्- ८ रुप्यकाः }

प्रकाशकः (प्रातिस्थानम्) } शंकर सखाराम सरनाईक, पुसद जि. यवतमाळ, (विदर्भ)

## प्रा. श्री. भा. वर्णेकर-

# विलिखितानि पुस्तकानि

(१) मन्दोर्मिमाला (चतुःशती)*
(२) महाभारतकथाः (आदिसभावनपर्वाणि)*
(३) संस्कृतनाट्यप्रवेशाः*
(४) प्रश्नावलीविमर्शः*
(५) जवाहरतरङ्गिणी (शतकम्)*
(६) विनायकवैजयन्ती (शतकम्)*
(७) कालिदासरहस्यम् (शतकम्)*
(८) रामकृष्णपरमहंसीयम् (शतकम्)
(९) मातृभू-लहरी (शतकम्)
(१०) वात्सल्यरसायनम् (शतकम्)
(११) शिवराज्योदयम् (महाकाव्यम्)
(१२) तर्ककारिकाः
(१३) शास्त्रकोषः
(१४) नव्यसंस्कृतसाहित्य समीक्षा-(बृहत्प्रबन्धः)
(१५) अभंगधर्मपद (धम्मपदस्य मराठीपद्यानुवादः)
(१६) ज्ञानेश्वरी-प्रतिच्छाया (मराठी छन्दोबद्धा)
(१७) भारतीय संस्कृति की रूपरेखा (हिन्दी)
(१८) गीतानुवादः (फ्रेञ्च भाषायाम्) ...

---

(* एतच्चिह्नाङ्कितानि पुस्तकानि ...